॥ सन्तानगणपतिस्तोत्रम् ॥
श्रीगणेशाय नमः ।
नमोऽस्तु गणनाथाय सिद्धिबुद्धियुताय च ।
सर्वप्रदाय देवाय पुत्रवृद्धिप्रदाय च ॥ १॥

गुरुदराय गुरवे गोप्त्रे गुह्यासिताय ते ।
गोप्याय गोपिताशेषभुवनाय चिदात्मने ॥२॥
विश्वमूलाय भव्याय विश्वसृष्टिकराय ते ।
नमो नमस्ते सत्याय सत्यपूर्णाय शुण्डिने ॥ ३॥
एकदन्ताय शुद्धाय सुमुखाय नमो नमः ।
प्रपन्नजनपालाय प्रणतार्तिविनाशिने ॥ ४॥
शरणं भव देवेश सन्ततिं सुदृढा कुरु।
भविष्यन्ति च ये पुत्रा मत्कुले गणनायक ॥ ५॥
ते सर्वे तव पूजार्थं निरताः स्युर्वरोमतः ।
पुत्रप्रदमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् ॥ ६॥

इति सन्तानगणपतिस्तोत्रं सम्पूर्णम् ।